वाक्यतापन्न ओङ्काग्नशाखैकवाक्यतापन्नो वा तत्तद्विषये भवति स एव ग्राह्य इति सर्वं रमणीयम् । बृहन्नारदीये—

विष्णवर्पितानि कर्माणि सकलानि भवन्ति हि ।
अनर्पितानि कर्माणि भस्मनि न्यस्तहव्यवत् ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ।
अर्पितं विष्णवे सर्वं सात्त्विकं सफलं भवेत् ॥ इति ।

विष्णुस्मरणात्सर्वं पूर्णं भवति । तथा च स्मृतिः—

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ इति ।

अनाज्ञातादिमन्त्रत्रयजपवैष्णव्यृग्जपव्याहृतिजपाः सर्वसंधानार्थं वक्तव्याः । तथा च स्मृत्यन्तरे—

अनाज्ञातादित्रितयं वैष्णवीमृचमेव च ।
समस्तव्याहृतीश्चैव जपेद्यज्ञस्य पूर्तये ॥ इति ।

सर्वयाज्ञिकोपयोगायायमुपोद्धात उक्तः । अयं दर्शपूर्णमासाद्यर्थोऽपि भवति । न तु केवलं सोमार्थ एवेति द्रष्टव्यमिति दिक् ।

इति श्रीमदोकोपाह्वश्रीगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचिष्यमाणसूत्रव्याख्यानोपयोगिसर्वशेषभूतोपोद्धातः समाप्तः ।

